अशलं गरलं फणी कलापो वसनं चर्म च वाहनं महोक्षः ।
मम दास्यसि किं किमस्ति शंभो तव पादाम्बुजभक्तिमेव देहि॥८७॥
यदा कृतांभोनिधिसेतुबन्धनः करस्थलाधःकृतपर्वताधिपः ।
भवानि ते लङ्घितपद्मसंभवः तदा शिवार्चास्तवभावनक्षमः॥८८॥
नतिभिर्नुतिभिस्त्वमीशपूजाविधिभिर्ध्यानसमाधिभिर्न तुष्टः ।
धनुषा मुसलेन चाश्मभिर्वा वद ते प्रीतिकरं तथा करोमि॥८९॥
वचसा चरितं वदामि शंभोरहमुद्योगविधासु तेऽप्रसक्तः ।
मनसा कृतिमीश्वरस्य सेवे शिरसा चैव सदाशिवं नमामि॥९०॥
आद्याऽविद्या हृद्गता निर्गतासीद्विद्या हृद्या हृद्गता त्वत्प्रसादात् ।
सेवे नित्यं श्रीकरं त्वत्पदाब्जं भावे मुक्तेर्भाजनं राजमौले॥९१॥
दूरीकृतानि दुरितानि दुरक्षराणि दौर्भाग्यदुःखदुरहंकृतिदुर्वचांसि ।
सारं त्वदीयचरितं नितरां पिबन्तं गौरीश मामिह समुद्धर सत्कटाक्षैः॥९२॥
सोमकलाधरमौलौ कोमलघनकन्धरे महामहसि । स्वामिनि गिरिजानाथे मामकहृदयं निरन्तरं रमताम्॥९३॥
सा रसना ते नयने तावेव करौ स एव कृतकृत्यः । या ये यौ यो भर्गं वदतीक्षेते सदार्चतः स्मरति॥९४॥
अतिमृदुलौ मम चरणावतिकठिनं ते मनो भवानीश ।
इति विचिकित्सां संत्यज शिव कथमासीद्गिरौ तथा प्रवेशः॥९५॥
धैर्याङ्कुशेन निभृतं रभसादाकृष्य भक्तिशृङ्खलया । पुरहर चरणालाने हृदयमदेभं बधान चिद्यन्त्रैः॥९६॥
प्रचरत्यभितः प्रगल्भवृत्त्या मदवानेष मनः करी गरीयान् ।
परिगृह्य नयेन भक्तिरज्ज्वा परम स्थाणुपदं दृढं नयामुम्॥९७॥
सर्वालंकारयुक्तां सरलपदयुतां साधुवृत्तां सुवर्णां सद्भिःसंस्तूयमानां सरसगुणयुतां लक्षितां लक्षणाढ्याम् ।
उद्यद्भूषाविशेषामुपगतविनयां द्योतमानार्थरेखां कल्याणीं देव गौरीप्रिय मम कविताकन्यकां त्वं गृहाण॥९८॥
इदं ते युक्तं वा परमशिव कारुण्यजलधे गतौ तिर्यग्रूपं तव पदशिरोदर्शनधिया ।
हरिब्रह्माणौ तौ दिवि भुवि चरन्तौ श्रमयुतौ कथं शंभो स्वामिन् कथय मम वेद्योऽसि पुरतः॥९९॥
स्तोत्रेणालमहं प्रवच्मि न मृषा देवा विरिञ्चादयः स्तुत्यानं गणनाप्रसङ्गसमये त्वामग्रगण्यं विदुः।
माहात्म्याग्रविचारणप्रकरणे धानातुषस्तोमवद्धूतास्त्वां विदुरुत्तमोत्तमफलं शंभो भवत्सेवकाः॥१००॥
॥ श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ शिवानन्दलहरी सम्पूर्णा॥

aśalaṁ garalaṁ phaṇī kalāpo vasanaṁ carma ca vāhanaṁ mahokṣaḥ |
mama dāsyasi kiṁ kimasti śaṁbho tava pādāmbujabhaktimeva dehi ||87||

yadā kṛtāṁbhonidhisetubandhanaḥ karasthalādhaḥkṛtaparvatādhipaḥ |
bhavāni te laṅghitapadmasaṁbhavaḥ tadā śivārcāstavabhāvanakṣamaḥ ||88||

natibhirnutibhistvamīśapūjāvidhibhirdhyānasamādhibhirna tuṣṭaḥ |
dhanuṣā musalena cāśmabhirvā vada te prītikaraṁ tathā karomi ||89||

vacasā caritaṁ vadāmi śaṁbhorahamudyogavidhāsu te'prasaktaḥ |
manasā kṛtimīśvarasya seve śirasā caiva sadāśivaṁ namāmi ||90||

ādyā'vidyā hṛdgatā nirgatāsīdvidyā hṛdyā hṛdgatā tvatprasādāt |
seve nityaṁ śrīkaraṁ tvatpadābjaṁ bhāve mukterbhājanaṁ rājamaule ||91||

dūrīkṛtāni duritāni durakṣarāṇi
daurbhāgyaduḥkhadurahaṁkṛtidurvacāṁsi |
sāraṁ tvadīyacaritaṁ nitarāṁ pibantaṁ
gaurīśa māmiha samuddhara satkaṭākṣaiḥ ||92||

somakalādharamaulau komalaghanakandhare mahāmahasi |
svāmini girijānāthe māmakahṛdayaṁ nirantaraṁ ramatām ||93||

sā rasanā te nayane tāveva karau sa eva kṛtakṛtyaḥ |
yā ye yau yo bhargaṁ vadatīkṣete sadārcataḥ smarati ||94||

atimṛdulau mama caraṇāvatikaṭhinaṁ te mano bhavānīśa |
iti vicikitsāṁ saṁtyaja śiva kathamāsīdgirau tathā praveśaḥ ||95||

dhairyāṅkuśena nibhṛtaṁ rabhasādākṛṣya bhaktiśṛṅkhalayā |
purahara caraṇālāne hṛdayamadebhaṁ badhāna cidyantraiḥ ||96||

pracaratyabhitaḥ pragalbhavṛttyā madavāneṣa manaḥ karī garīyān |
parigṛhya nayena bhaktirajjvā parama sthāṇupadaṁ dṛḍhaṁ nayāmum ||97||

sarvālaṁkārayuktāṁ saralapadayutāṁ sādhuvṛttāṁ suvarṇāṁ
sadbhiḥsaṁstūyamānāṁ sarasaguṇayutāṁ lakṣitāṁ lakṣaṇāḍhyām |
udyadbhūṣāviśeṣāmupagatavinayāṁ dyotamānārtharekhāṁ
kalyāṇīṁ deva gaurīpriya mama kavitākanyakāṁ tvaṁ gṛhāṇa ||98||

idaṁ te yuktaṁ vā paramaśiva kāruṇyajaladhe
gatau tiryagrūpaṁ tava padaśirodarśanadhiyā |
haribrahmāṇau tau divi bhuvi carantau śramayutau
kathaṁ śaṁbho svāmin kathaya mama vedyo'si purataḥ ||99||

stotreṇālamahaṁ pravacmi na mṛṣā devā viriñcādayaḥ
stutyānaṁ gaṇanāprasaṅgasamaye tvāmagragaṇyaṁ viduḥ |
māhātmyāgravicāraṇaprakaraṇe dhānātuṣastomava-
ddhūtāstvāṁ viduruttamottamaphalaṁ śaṁbho bhavatsevakāḥ ||100||

|| śrīmatparamahaṁsaparivrājakācāryasya śrīgovindabhagavatpūjyapādaśiṣyasya
śrīmacchaṅkarabhagavataḥ kṛtau śivānandalaharī sampūrṇā ||

|| śankarācarya padāvalamba suvarṇamālāstuti ||

Recite these on day 2:

॥ एकश्लोकी ॥

किं ज्योतिस्तवभानुमानहनि मे रात्रौ प्रदीपादिकं स्यादेवं रविदीपदर्शनविधौ किं ज्योतिराख्याहि मे ।
चक्शुस्तस्य निमीलनादिसमये किं धीर्धियो दर्शने किं तत्राहमतो भवान्परमकं ज्योतिस्तदस्मि प्रभो ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ एकश्लोकी संपूर्णा ॥

॥ दशश्लोकी ॥

न भूमिर्न तोयं न तेजो न वायुः न खं नेन्द्रियं वा न तेषां समूहः ।
अनेकान्तिकत्वात् सुषुप्त्येकसिद्धः तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥
न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणाध्यानयोगादयोपि ।
अनात्माश्रयाहंममाध्यासहानात् तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥
न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ।
सुषप्तौ निरस्तातिशून्यात्मकत्वात्  तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥
न साख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा ।
विशिष्टानुभूत्या विशुद्धात्मकत्वात् तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ४ ॥
न चोर्ध्वं न चाधो न चान्तर्न बाह्यं न मध्यं न तिर्यँ न पूर्वाऽपरा दिक् ।
वियद्व्यापकत्वादखण्डैकरूपः तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ५ ॥
न शुक्लं न कृष्णं न रक्तं न पीतं न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ।
अरूपं तथा ज्योतिराकारकत्वात् तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ६ ॥
न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं न चायं प्रपञ्चः ।
स्वरूपावबोधो विकल्पासहिष्णुः तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ७ ॥
न जाग्रन् न मे स्वप्नको वा सुषुप्तिः न विश्वौ न वा तैजसः प्राज्ञको वा ।
अविद्यात्मकत्वात् त्रयाणं तुरीयः तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ८ ॥
अपि व्यापकत्वात् हितत्वप्रयोगात् स्वतः सिद्धभावादनन्याश्रयत्वात् ।
जगत् तुच्छमेतत् समस्तं तदन्यत् तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ९ ॥
न चैकं तदन्यद् द्वितीयं कुतः स्यात् न केवलत्वं न चाऽकेवलत्वम् ।
न शुन्यं न चाशून्यमद्वैतकत्वात् कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥ १० ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ दशश्लोकी सम्पूर्णा ॥

Recite these on day 2:

|| ekaślokī ||

kiṁ jyotistavabhānumānahani me rātrau pradīpādikaṁ
syādevaṁ ravidīpadarśanavidhau kiṁ jyotirākhyāhi me |
cakśustasya nimīlanādisamaye kiṁ dhīrdhiyo darśane
kiṁ tatrāhamato bhavānparamakaṁ jyotistadasmi prabho ||

|| iti śrīmatparamahaṁsaparivrājakācāryasya śrīgovindabhagavatpūjyapādaśiṣyasya
śrīmacchaṅkarabhagavataḥ kṛtau ekaślokī saṁpūrṇā ||

|| daśaślokī ||

na bhūmirna toyaṁ na tejo na vāyuḥ na khaṁ nendriyaṁ vā na teṣāṁ samūhaḥ |
anekāntikatvāt suṣuptyekasiddaḥ tadeko'vaśiṣṭaḥ śivaḥ kevalo'ham ||1||

na varṇā na varṇāśramācāradharmā na me dhāraṇādhyānayogādayopi |
anātmāśrayāhaṁmamādhyāsahānāt tadeko'vaśiṣṭaḥ śivaḥ kevalo'ham ||2||

na mātā pitā vā na devā na lokā na vedā na yajñā na tīrtha bruvanti |
suṣaptau nirastātiśūnyātmakatvāt tadeko'vaśiṣṭaḥ śivaḥ kevalo'ham ||3||

na sākhyaṁ na śaivaṁ na tatpāñcarātraṁ na jainaṁ na mīmāṁsakādermataṁ vā |
viśiṣṭānubhūtyā viśuddhātmakatvāt tadeko'vaśiṣṭaḥ śivaḥ kevalo'ham ||4||

na cordhva na cādho na cāntarna bāhyaṁ na madhyaṁ na tiryaṅ na pūrvā'parā dik |
viyadvyāpakatvādakhaṇḍaikarūpaḥ tadeko'vaśiṣṭaḥ śivaḥ kevalo'ham ||5||

na śuklaṁ na kṛṣṇaṁ na raktaṁ na pītaṁ na kubjaṁ na pīnaṁ na hrasvaṁ na dīrgham |
arūpaṁ tathā jyotirākārakatvāt tadeko'vaśiṣṭaḥ śivaḥ kevalo'ham ||6||

na śāstā na śāstraṁ na śiṣyo na śikṣā na ca tvaṁ na cāhaṁ na cāyaṁ prapañcaḥ |
svarūpāvabodho vikalpāsahiṣṇuḥ tadeko'vaśiṣṭaḥ śivaḥ kevalo'ham ||7||

na jāgran na me svapnako vā suṣuptiḥ na viśvau na vā taijasaḥ prājñako vā |
avidyātmakatvāt trayāṇaṁ turīyaḥ tadeko'vaśiṣṭaḥ śivaḥ kevalo'ham ||8||

api vyāpakatvāt hitatvaprayogāt svataḥ siddhabhāvādananyāśrayatvāt |
jagat tucchametat samastaṁ tadanyat tadeko'vaśiṣṭaḥ śivaḥ kevalo'ham ||9||

na caikaṁ tadanyad dvitīyaṁ kutaḥ syāt na kevalatvaṁ na cā'kevalatvam |
na śunyaṁ na cāśūnyamadvaitakatvāt kathaṁ sarvavedāntasiddhaṁ bravīmi ||10||

|| iti śrīmatparamahaṁsaparivrājakācāryasya śrīgovindabhagavatpūjyapādaśiṣyasya
śrīmacchaṅkarabhagavataḥ kṛtau daśaślokī sampūrṇā ||

॥ श्री सुब्रह्मण्य भुजङ्गम् ॥

सदा बालरूपाऽपि विघ्नाद्रिहन्त्री महादन्तिवक्त्राऽपि पञ्चास्यमान्या ।
विधीन्द्रादिमृग्या गणेशाभिधा मे विधत्तां श्रियं काऽपि कल्याणमूर्तिः ॥ १ ॥
न जानामि शब्दं न जानामि चार्थं न जानामि पद्यं न जानामि गद्यम् ।
चिदेका षडास्य हृदि द्योतते मे मुखान्निःसरन्ते गिरश्चापि चित्रम् ॥ २ ॥
मयूराधिरूढं महावाक्यगूढं मनोहारिदेहं महच्चित्तगेहम् ।
महीदेवदेवं महावेदभावं महादेवबालं भजे लोकपालम् ॥ ३ ॥
यदा संनिधानं गता मानवा मे भवाम्भोधिपारं गतास्ते तदैव ।
इति व्यञ्जयन्सिन्धुतीरे य आस्ते तमीडे पवित्रं पराशक्तिपुत्रम् ॥ ४ ॥
यथाब्धेस्तरङ्गा लयं यन्ति तुङ्गास्तथैवापदः सन्निधौ सेवतां मे ।
इतीवोर्मिपंक्तीर्नृणां दर्शयन्तं सदा भावये हृत्सरोजे गुहं तम् ॥ ५ ॥
गिरौ मन्निवासे नरा येऽधिरूढास्तदा पर्वते राजते तेऽधिरूढाः ।
इतीव ब्रुवन्गन्धशैलाधिरूढः स देवो मुदे मे सदा षण्मुखोऽस्तु ॥ ६ ॥
महाम्भोधितीरे महापापचोरे मुनीन्द्रानुकूले सुगन्धाख्यशैले ।
गुहायां वसन्तं स्वभासा लसन्तं जनार्तिं हरन्तं श्रयामो गुहं तम् ॥ ७ ॥
लसत्स्वर्णगेहे नृणां कामदोहे सुमस्तोमसंछन्नमाणिक्यमञ्चे ।
समुद्यत्सहस्रार्कतुल्यप्रकाशं सदा भावये कार्तिकेयं सुरेशम् ॥ ८ ॥
रणद्धंसके मञ्जुलेऽत्यन्तशोणे मनोहारिलावण्यपीयूषपूर्णे ।
मनःषट्पदो मे भवक्लेशतप्तः सदा मोदतां स्कन्द ते पादपद्मे ॥ ९ ॥
सुवर्णाभदिव्याम्बरैर्भासमानां क्वणत्किङ्किणीमेखलाशोभमानाम् ।
लसद्धेमपट्टेन विद्योतमानां कटिं भावये स्कन्द ते दीप्यमानाम् ॥ १० ॥
पुलिन्देशकन्याघनाभोगतुङ्गस्तनालिङ्गनासक्तकाश्मीररागम् ।
नमस्यामहं तारकारे तवोरः स्वभक्तावने सर्वदा सानुरागम् ॥ ११ ॥
विधौ क्लृप्तदण्डान् स्वलीलाधृताण्डान्निरस्तेभशुण्डान् द्विषत्कालदण्डान् ।
हतेन्द्रारिषण्डाञ्जगत्त्राणशौण्डान् सदा ते प्रचण्डान् श्रये बाहुदण्डान् ॥ १२ ॥

|| śrī subrahmaṇya bhujaṅgam ||

sadā bālarūpā'pi vighnādrihantrī mahādantivaktrā'pi pañcāsyamānyā |
vidhīndrādimṛgyā gaṇeśābhidhā me vidhattāṁ śriyaṁ kā'pi kalyāṇamūrtiḥ ||1||

na jānāmi śabdaṁ na jānāmi cārthaṁ na jānāmi padyaṁ na jānāmi gadyam |
cidekā ṣaḍāsya hṛdi dyotate me mukhānniḥsarante giraścāpi citram ||2||

mayūrādhirūḍhaṁ mahāvākyagūḍhaṁ manohāridehaṁ mahaccittageham |
mahīdevadevaṁ mahāvedabhāvaṁ mahādevabālaṁ bhaje lokapālam ||3||

yadā saṁnidhānaṁ gatā mānavā me bhavāmbhodhipāraṁ gatāste tadaiva |
iti vyañjayansindhutīre ya āste tamīḍe pavitraṁ parāśaktiputram ||4||

yathābdhestaraṅgā layaṁ yanti tuṅgāstathaivāpadaḥ sannidhau sevatāṁ me |
itīvormipaṁktīrnṛṇāṁ darśayantaṁ sadā bhāvaye hṛtsaroje guhaṁ tam ||5||

girau mannivāse narā ye'dhirūḍhāstadā parvate rājate te'dhirūḍhāḥ |
itīva bruvangandhaśailādhirūḍhaḥ sa devo mude me sadā ṣaṇmukho'stu ||6||

mahāmbhodhitīre mahāpāpacore munindrānukūle sugandhākhyaśaile |
guhāyāṁ vasantaṁ svabhāsā lasantaṁ janārtiṁ harantaṁ śrayāmo guhaṁ tam ||7||

lasatsvarṇagehe nṛṇāṁ kāmadohe sumastomasaṁchannamāṇikyamañce |
samudyatsahasrārkatulyaprakāśaṁ sadā bhāvaye kārtikeyaṁ sureśam ||8||

raṇaddhaṁsake mañjule'tyantaśoṇe manohārilāvaṇyapīyūṣapūrṇe |
manaḥṣaṭpado me bhavakleśataptaḥ sadā modatāṁ skanda te pādapadme ||9||

suvarṇābhadivyāmbarairbhāsamānāṁ kvaṇatkiṅkiṇīmekhalāśobhamānām |
lasaddhemapaṭṭena vidyotamānāṁ kaṭiṁ bhāvaye skanda te dīpyamānām ||10||

pulindeśakanyāghanābhogatuṅgastanāliṅganāsaktakāśmīrarāgam |
namasyāmahaṁ tārakāre tavoraḥ svabhaktāvane sarvadā sānurāgam ||11||

vidhau kḷptadaṇḍān svalīlādhṛtāṇḍānnirastebhaśuṇḍān dviṣatkāladaṇḍān |
hatendrāriṣaṇḍāñjagatrāṇaśauṇḍānsadā te pracaṇḍān śraye bāhudaṇḍān ||12||

सदा शारदाः षण्मृगाङ्का यदि स्युः समुद्यन्त एव स्थिताश्चेत्समन्तात् ।
सदा पूर्णबिम्बाः कलङ्कैश्च हीनास्तदा त्वन्मुखानां ब्रुवे स्कन्द साम्यम् ॥ १३ ॥
स्फुरन्मन्दहासैः सहंसानि चञ्चत्कटाक्षावलीभृङ्गसंघोज्ज्वलानि ।
सुधास्यन्दिबिम्बाधरणीशसूनो तवालोकये षण्मुखाम्भोरुहाणि ॥ १४ ॥
विशालेषु कर्णान्तदीर्घेष्वजस्त्रं दयास्यन्दिषु द्वादशस्वीक्षणेषु ।
मयीषत्कटाक्षः सकृत्पातितश्चेद्भवेत्ते दयाशील का नाम हानिः ॥ १५ ॥
सुताङ्गोद्भवो मेऽसि जीवेति षड्धा जपन्मन्त्रमीशो मुदा जिघ्रते यान् ।
जगद्भारभृद्भ्यो जगन्नाथ तेभ्यः किरीटोज्ज्वलेभ्यो नमो मस्तकेभ्यः ॥ १६ ॥
स्फुरद्रत्नकेयूरहाराभिरामश्चलत्कुण्डलश्रीलसद्गण्डभागः ।
कटौ पीतवासः करे चारुशक्तिः पुरस्तान्ममास्तां पुरारेस्तनूजः ॥ १७ ॥
इहायाहि वत्सेति हस्तान्प्रसार्याह्वयत्यादराच्छङ्करे मातुरङ्कात् ।
समुत्पत्य तातं श्रयन्तं कुमारं हराश्लिष्टगात्रं भजे  बालमूर्तिम् ॥ १८ ॥
कुमारेशसूनो गुह स्कन्द सेनापते शक्तिपाणे मयूराधिरूढ ।
पुलिन्दात्मजाकान्त भक्तार्तिहारिन् प्रभो तारकारे सदा रक्ष मां त्वम् ॥ १९ ॥
प्रशान्तेन्द्रिये नष्टसंज्ञे विचेष्टे कफोद्गारिवक्त्रे भयोत्कम्पिगात्रे ।
प्रयाणोन्मुखे मय्यनाथे तदानीं द्रुतं मे दयालो भवाग्रे गुह त्वम् ॥ २० ॥
कृतान्तस्य दूतेषु चण्डेषु कोपाद्दह च्छिन्धि भिन्धीति मां तर्जयत्सु।
मयूरं समारुह्य मा भैरिति त्वं पुरः शक्तिपाणिर्ममायाहि शीघ्रम् ॥ २१ ॥
प्रणम्यासकृत्पादयोस्ते पतित्वा प्रसाद्य प्रभो प्रार्थयेऽनेकवारम् ।
न वक्तुं क्षमोऽहं तदानीं कृपाब्धे न कार्यान्तकाले मनागप्युपेक्षा ॥ २२ ॥
सहस्राण्डभोक्ता त्वया शूरनामा हतस्तारकः सिंहवक्त्रश्च दैत्यः ।
ममान्तर्हृदिस्थं मनःक्लेशमेकं न हंसि प्रभो किं करोमि क्व यामि ॥ २३ ॥
अहं सर्वदा दुःखभारावसन्नो भवान्दीनबन्धुस्त्वदन्यं न याचे ।
भवद्भक्तिरोधं सदा क्लृप्तबाधं ममाधिं द्रुतं नाशयोमासुत त्वम् ॥ २४ ॥
अपस्मारकुष्टक्षयार्शः प्रमेहज्वरोन्मादगुल्मादिरोगा महान्तः ।
पिशाचाश्च सर्वे भवत्पत्रभूतिं विलोक्य क्षणात्तारकारे द्रवन्ते ॥ २५ ॥

sadā śāradāḥ ṣaṇmṛgāṅkā yadi syuḥ samudyanta eva sthitāścetsamantāt |
sadā pūrṇabimbāḥ kalaṅkaiśca hīnāstadā tvanmukhānāṁ bruve skanda sāmyam ||13||

sphuranmandahāsaiḥ sahaṁsāni cañcatkaṭākṣāvalībhṛṅgasaṁghojjvalāni |
sudhāsyandibimbādharaṇīśasūno tavālokaye ṣaṇmukhāmbhoruhāṇi ||14||

viśāleṣu karṇāntadīrgheṣvajasraṁ dayāsyandiṣu dvādaśasvīkṣaṇeṣu |
mayīṣatkaṭākṣaḥ sakṛtpātitaścedbhavette dayāśīla kā nāma hāniḥ ||15||

sutāṅgodbhavo me'si jīveti ṣaḍdhā japanmantramīśo mudā jighrate yān |
jagadbhārabhṛdbhyo jagannātha tebhyaḥ kirīṭojjvalebhyo namo mastakebhyaḥ ||16||

sphuradratnakeyūrahārābhirāmaścalatkuṇḍalaśrīlasadgaṇḍabhāgaḥ |
kaṭau pītavāsaḥ kare cāruśaktiḥ purastānmamāstāṁ purārestanūjaḥ ||17||

ihāyāhi vatseti hastānprasāryāhvayatyādarācchaṅkare māturaṅkāt |
samutpatya tātaṁ śrayantaṁ kumāraṁ harāśliṣṭagātraṁ bhaje bālamūrtim ||18||

kumāreśasūno guha skanda senāpate śaktipāṇe mayūrādhirūḍha |
pulindātmajākānta bhaktārtihārin prabho tārakāre sadā rakṣa māṁ tvam ||19||

praśāntendriye naṣṭasaṁjñe viceṣṭe kaphodgārivaktre bhayotkampigātre |
prayāṇonmukhe mayyanāthe tadānīṁ drutaṁ me dayālo bhavāgre guha tvam ||20||

kṛtāntasya dūteṣu caṇḍeṣu kopāddaha cchinddhi bhinddhīti māṁ tarjayatsu |
mayūraṁ samāruhya mā bhairiti tvaṁ puraḥ śaktipāṇirmamāyāhi śīghram ||21||

praṇamyāsakṛtpādayoste patitvā prasādya prabho prārthaye'nekavāram |
na vaktuṁ kṣamo'haṁ tadānīṁ kṛpābdhe na kāryāntakāle manāgapyupekṣā ||22||

sahasrāṇḍabhoktā tvayā śūranāmā hatastārakaḥ siṁhavaktraśca daityaḥ |
mamāntarhṛdisthaṁ manaḥkleśamekaṁ na haṁsi prabho kiṁ karomi kva yāmi ||23||

ahaṁ sarvadā duḥkhabhārāvasanno bhavāndīnabandhustvadanyaṁ na yāce |
bhavadbhaktirodhaṁ sadā kḷptabādhaṁ mamādhiṁ drutaṁ nāśayomāsuta tvam ||24||

apasmārakuṣṭakṣayārśaḥ pramehajvaronmādagulmādirogā mahāntaḥ |
piśācāśca sarve bhavatpatrabhūtiṁ vilokya kṣaṇāttārakāre dravante ||25||

दृशि स्कन्दमूर्तिः श्रुतौ स्कन्दकीर्तिर्मुखे मे पवित्रं सदा तच्चरित्रम् ।
करे तस्य कृत्यं वपुस्तस्य भृत्यं गुहे सन्तु लीना ममाशेषभावाः॥ २६॥
मुनीनामुताहो नृणां भक्तिभाजामभीष्टप्रदाः सन्ति सर्वत्र देवाः ।
नृणामन्त्यजानामपि स्वार्थदाने गुहाद्देवमन्यं न जाने न जाने॥ २७॥
कलत्रं सुता बन्धुवर्गः पशुर्वा नरो वाथ नारि गृहे ये मदियाः ।
यजन्तो नमन्तः स्तुवन्तो भवन्तं स्मरन्तश्च ते सन्तु सर्वे कुमार॥ २८॥
मृगाः पक्षिणो दंशका ये च दुष्टास्तथा व्याधयो बाधका ये मदङ्गे ।
भवच्छक्तितीक्ष्णाग्रभिन्नाः सुदूरे विनश्यन्तु ते चूर्णितक्रौञ्चशैल॥ २९॥
जनित्री पिता च स्वपुत्रापराधं  सहेते न किं देवसेनाधिनाथ ।
अहं चातिबालो भवान् लोकतातः  क्षमस्वापराधं समस्तं महेश॥ ३०॥
नमः केकिने शक्तये चापि तुभ्यं  नमश्छाग तुभ्यं नमः कुक्कुटाय ।
नमः सिन्धवे सिन्धुदेशाय तुभ्यं  पुनः स्कन्दमूर्ते नमस्ते नमोऽस्तु॥ ३१॥
जयानन्दभूमञ्जयापारधाम ञ्जयामोघकीर्ते जयानन्दमूर्ते ।
जयानन्दसिन्धो जयाशेषबन्धो  जय त्वं सदा मुक्तिदानेशसूनो॥ ३२॥
भुजङ्गाख्यवृत्तेन क्लृप्तं स्तवं यः  पठेद्भक्तियुक्तो गुहं संप्रणम्य ।
सुपुत्रान्कलत्रं धनं दीर्घमायु र्लभेत्स्कन्दसायुज्यमन्ते नरः सः॥ ३३॥
॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ श्रीसुब्रह्मण्यभुजङ्गं संपूर्णम्॥

॥श्रीशङ्कराचार्यभुजङ्गप्रयात स्तोत्रम्॥

कृपासागरायाशुकाव्यप्रदाय प्रणम्राखिलाभीष्टसन्दायकाय ।
यतीन्द्रैरुपास्याङ्घ्रिपाथोरुहाय प्रबोधप्रदात्रे नमः शङ्कराय॥ १॥
चिदानन्दरूपाय चिन्मुद्रिकोद्यत्करायेशपर्यायरूपाय तुभ्यम् ।
मुदा गीयमानाय वेदोत्तमाङ्गैः श्रितानन्ददात्रे नमः शङ्कराय॥ २॥
जटाजूटमध्ये पुरा या सुराणां धुनी साद्य कर्मन्दिरूपस्य शम्भोः ।
गले मल्लिकामालिकाव्याजतस्ते विभातीति मन्ये गुरो किं तथैव॥ ३॥

dṛśi skandamūrtiḥ śrutau skandakīrtirmukhe me pavitraṁ sadā taccaritram |
kare tasya kṛtyaṁ vapustasya bhṛtyaṁ guhe santu līnā mamāśeṣabhāvāḥ ||26||

munīnāmutāho nṛṇāṁ bhaktibhājāmabhīṣṭapradāḥ santi sarvatra devāḥ |
nṛṇāmantyajānāmapi svārthadāne guhāddevamanyaṁ na jāne na jāne ||27||

kalatraṁ sutā bandhuvargaḥ paśurvā naro vātha nāri gṛhe ye madiyāḥ |
yajanto namantaḥ stuvanto bhavantaṁ smarantaśca te santu sarve kumāra ||28||

mṛgāḥ pakṣiṇo daṁśakā ye ca duṣṭāstathā vyādhayo bādhakā ye madaṅge |
bhavacchaktitīkṣṇāgrabhinnāḥ sudūre vinaśyantu te cūrṇitakrauñjaśaila ||29||

janitrī pitā ca svaputrāparādhaṁ sahete na kiṁ devasenādhinātha |
ahaṁ cātibālo bhavān lokatātaḥ kṣamasvāparādhaṁ samastaṁ maheśa ||30||

namaḥ kekine śaktaye cāpi tubhyaṁ namaśchāga tubhyaṁ namaḥ kukkuṭāya |
namaḥ sindhave sindhudeśāya tubhyaṁ punaḥ skandamūrte namaste namo'stu ||31||

jayānandabhūmañjayāpāradhāmañjayāmoghakīrte jayānandamūrte |
jayānandasindho jayāśeṣabandho jaya tvaṁ sadā muktidāneśasūno ||32||

bhujaṅgākhyavṛttena kḻṛptaṁ stavaṁ yaḥ paṭhedbhaktiyukto guhaṁ saṁpraṇamya |
suputrānkalatraṁ dhanaṁ dīrghamāyurlabhetskandasāyujyamante naraḥ saḥ ||33||

|| iti śrīmatparamahaṁsaparivrājakācāryasya śrīgovindabhagavatpūjyapādaśiṣyasya
śrīmacchaṅkarabhagavataḥ kṛtau śrīsubrahmaṇyabhujaṅgaṁ saṁpūrṇam ||

|| śrīśaṅkarācāryabhujaṅgaprayāta-stotram ||

kṛpāsāgarāyāśukāvyapradāya praṇamrākhilābhīṣṭasandāyakāya |
yatīndrairupāsyāṅghripāthoruhāya prabodhapradātre namaḥ śaṅkarāya ||1||

cidānandarūpāya cinmudrikodyatkarāyeśaparyāyarūpāya tubhyam |
mudā gīyamānāya vedottamāṅgaiḥ śritānandadātre namaḥ śaṅkarāya ||2||

jaṭājūṭamadhye purā yā surāṇāṁ dhunī sādya karmandirūpasya śambhoḥ
gale mallikāmālikāvyājataste vibhātīti manye guro kiṁ tathaiva ||3||

नखेन्दुप्रभाधूतनम्रालिहार्दान्धकारव्रजायाब्जमन्दस्मिताय ।

महामोहपाथोनिधेर्बाडबाय प्रशान्ताय कुर्मो नमः शङ्कराय॥४॥

प्रणम्रान्तरङ्गाब्जबोधप्रदात्रे दिवारात्रमव्याहतोस्त्राय कामम् ।

क्षपेशाय चित्राय लक्ष्म क्षयाभ्यां विहीनाय कुर्मो नमः शङ्कराय॥५॥

प्रणम्रास्यपाथोजमोदप्रदात्रे सदान्तस्तमस्तोमसंहारकर्त्रे ।

रजन्या मपीद्धप्रकाशाय कुर्मो ह्यपूर्वाय पूष्णे नमः शङ्कराय॥६॥

नतानां हृदब्जानि फुल्लानि शीघ्रं करोम्याशु योगप्रदानेन नूनम् ।

प्रबोधाय चेत्थं सरोजानि धत्से प्रफुल्लानि किं भो गुरो ब्रूहि मह्यम्॥७॥

प्रभाधूतचन्द्रायुतायाखिलेष्टप्रदायानतानां समूहाय शीघ्रम् ।

प्रतीपाय नम्रौघदुःखाघपङ्क्तेर्मुदा सर्वदा स्यान्नमः शङ्कराय॥८॥

विनिष्कासितानीश तत्त्वावबोधान्नतानां मनोभ्यो ह्यनन्याश्रयाणि ।

रजांसि प्रपन्नानि पादाम्बुजातं गुरो रक्तवस्त्रापदेशाद्बिभर्षि॥९॥

मतेर्वेदशीर्षाध्वसम्प्रापकायानतानां जनानां कृपार्द्रैः कटाक्षैः ।

ततेः पापबृन्दस्य शीघ्रं निहन्त्रे स्मितास्याय कुर्मो नमः शङ्कराय॥१०॥

सुपर्वोक्तिगन्धेन हीनाय तूर्णं पुरा तोटकायाखिलज्ञानदात्रे ।

प्रवालीयगर्वापहारस्य कर्त्रे पदाब्जम्रदिम्ना नमः शङ्कराय॥११॥

भवाम्भोधिमग्नान्जनान्दुःखयुक्तान् जवादुद्दिधीर्षुर्भवानित्यहोऽहम् ।

विदित्वा हि ते कीर्तिमन्यादृशाम्भो सुखं निर्विशङ्कः स्वपिम्यस्तयत्नः॥१२॥

॥ इति श्रीसच्चिदानन्द-शिवाभिनव-नृसिंह-भारती महास्वामिभिः श्रीकालटिक्षेत्रे विरचितं श्रीशङ्कराचार्य-भुजङ्गप्रयातस्तोत्रम् संपूर्णम् ॥

Recite these on day 3:

॥ लक्ष्मीनृसिंहपञ्चरत्नम्॥

त्वत्प्रभुजीवप्रियमिच्छसि चेन्नरहरिपूजां कुरु सततं प्रतिबिम्बालंकृतिधृतिकुशलो बिम्बालंकृतिमातनुते ।

चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम्॥१॥

शुक्तौ रजतप्रतिभा जाता कतकाद्यर्थसमर्था चेद्दुःखमयी ते संसृतिरेषा निर्वृतिदाने निपुणा स्यात् ।

चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम्॥२॥

nakhenduprabhādhūtanamrālihārdāndhakāravrajāyābjamandasmitāya |
mahāmohapāthonidherbāḍabāya praśāntāya kurmo namaḥ śaṅkarāya ||4||

praṇamrāntaraṅgābjabodhapradātre divārātramavyāhatosrāya kāmam |
kṣapeśāya citrāya lakṣma kṣayābhyāṁ vihīnāya kurmo namaḥ śaṅkarāya ||5||

praṇamrāsyapāthojamodapradātre sadāntastamastomasaṁhārakartre |
rajanyā mapīddhaprakāśāya kurmo hyapūrvāya pūṣṇe namaḥ śaṅkarāya ||6||

natānāṁ hṛdabjāni phullāni śīghraṁ karomyāśu yogapradānena nūnam |
prabodhāya cetthaṁ sarojāni dhatse praphullāni kiṁ bho guro brūhi mahyam ||7||

prabhādhūtacandrāyutāyākhileṣṭapradāyānatānāṁ samūhāya śīghram |
pratīpāya namraughaduḥkhāghapaṅktermudā sarvadā syānnamaḥ śaṅkarāya ||8||

viniṣkāsitānīśa tattvāvabodhānnatānāṁ manobhyo hyananyāśrayāṇi |
rajāṁsi prapannāni pādāmbujātaṁ guro raktavastrāpadeśādbibharṣi ||9||

matervedaśīrṣādhvasamprāpakāyānatānāṁ janānāṁ kṛpārdraiḥ kaṭākṣaiḥ |
tateḥ pāpabṛndasya śīghraṁ nihantre smitāsyāya kurmo namaḥ śaṅkarāya ||10||

suparvoktigandhena hīnāya tūrṇaṁpurā toṭakāyākhilajñānadātre |
pravālīyagarvāpahārasya kartre padābjamradimnā namaḥ śaṅkarāya ||11||

bhavāmbhodhimagnānjanānduḥkhayuktān javāduddidhīrṣurbhavānityaho'ham |
viditvā hi te kīrtimanyādṛśāmbho sukhaṁ nirviśaṅkaḥ svapimyastayatnaḥ ||12||

|| iti śrīsaccidānanda-śivābhinava-nṛsiṁha-bhāratī mahāsvāmibhiḥ śrīkālaṭikṣetre viracitaṁ
śrīśaṅkarācārya-bhujaṅgaprayātastotram saṁpūrṇam ||

## Recite these on day 3

## || lakśmīnṛsiṁhapañcaratnam ||

tvatprabhujīvapriyamicchasi cennaraharipūjāṁ kuru satataṁ
pratibimbālaṁkṛtidhṛtikuśalo bimbālaṁkṛtimātanute |
cetobhṛṅga bhramasi vṛthā bhavamarubhūmau virasāyāṁ
bhaja bhaja lakśmīnarasiṁhānaghapadasarasijamakarandam ||1||

śukttau rajatapratibhā jātā katakādyarthasamarthā ce-
dduḥkhamayī te saṁsṛtireṣā nirvṛtidāne nipuṇā syāt |
cetobhṛṅga bhramasi vṛthā bhavamarubhūmau virasāyāṁ
bhaja bhaja lakśmīnarasiṁhānaghapadasarasijamakarandam ||2||

आकृतिसाम्याच्छाल्मलिकुसुमे स्थलनलिनत्वभ्रममकरोः
गन्धरसाविह किमु विद्येते विफलं भ्राम्यसि भृशविरसेस्मिन् ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम्॥ ३॥
स्रक्चन्दनवनितादीन्विषयान्सुखदान्मत्वा तत्र विहरसे गन्धफलीसदृशा ननु तेमी भोगानन्तरदुःखकृतः स्युः ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम्॥ ४॥
तव हितमेकं वचनं वक्ष्ये श्रृणु सुखकामो यदि सततं स्वप्ने दृष्टं सकलं हि मृषा जाग्रति च स्मर तद्वदिति ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम्॥ ५॥
॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्री गोविन्द भगवत्पूज्यपाद शिष्यस्य श्रीमच्छंकर भगवतः कृतौ लक्ष्मीनृसिंहपञ्चरत्नम् सम्पूर्णम् ॥

## ॥ लक्ष्मीनृसिंहकरुणावलम्बस्तोत्रम्॥

श्रीमत्पयोनिधिनिकेतनचक्रपाणे भोगीन्द्रभोगमणिराजितपुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलम्बम्॥ १॥
ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटिसङ्घट्टिताङ्घ्रिकमलामलकान्तिकान्त ।
लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह मम देहि करावलम्बम्॥ २॥
संसारदावदहनाकरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य ।
त्वत्पादपद्मसरसीरुहमागतस्य लक्ष्मीनृसिंह मम देहि करावलम्बम्॥ ३॥
संसारजालपतितस्य जगन्निवास सर्वेन्द्रियार्थबडिशाग्रझषोपमस्य ।
प्रोत्कम्पितप्रचुरतालुकमस्तकस्य लक्ष्मीनृसिंह मम देहि करावलम्बम्॥ ४॥
संसारकूपमतिघोरमगाधमूलं संप्राप्य दुःखशतसर्पसमाकुलस्य ।
दीनस्य देव कृपया पदमागतस्य लक्ष्मीनृसिंह मम देहि करावलम्बम्॥ ५॥
संसारभीकरकरीन्द्रकराभिघातनिष्पीड्यमानवपुषः सकलार्तिनाश।
प्राणप्रयाणभवभीतिसमाकुलस्य लक्ष्मीनृसिंह मम देहि करावलम्बम्॥ ६॥
संसारसर्पविषदिग्धमहोग्रतीव्रदंष्ट्राग्रकोटिपरिदष्टविनष्टमूर्तेः ।
नागारिवाहन सुधाब्धिनिवास शौरे लक्ष्मीनृसिंह मम देहि करावलम्बम्॥ ७॥

ākṛtisāmyācchālmalikusume sthalanalinatvabhramamakaroḥ
gandharasāviha kimu vidyete viphalaṁ bhrāmyasi bhṛśavirasesmin |
cetobhṛṅga bhramasi vṛthā bhavamarubhūmau virasāyāṁ
bhaja bhaja lakśmīnarasiṁhānaghapadasarasijamakarandam ||3||

srakcandanavanitādīnviṣayānsukhadānmatvā tatra viharase
gandhaphalīsadṛśā nanu temī bhogānantaraduḥkhakṛtaḥ syuḥ |
cetobhṛṅga bhramasi vṛthā bhavamarubhūmau virasāyāṁ
bhaja bhaja lakśmīnarasiṁhānaghapadasarasijamakarandam ||4||

tava hitamekaṁ vacanaṁ vakśye śṛṇu sukhakāmo yadi satataṁ
svapne dṛṣṭaṁ sakalaṁ hi mṛṣā jāgrati ca smara tadvaditi|
cetobhṛṅga bhramasi vṛthā bhavamarubhūmau virasāyāṁ
bhaja bhaja lakśmīnarasiṁhānaghapadasarasijamakarandam ||5||

|| iti śrīmatparamahaṁsaparivrājakācāryasya śrī govinda bhagavatpūjyapāda śiṣyasya śrīmacchaṁkara bhagavataḥ kṛtau lakśmīnṛsiṁha pañcaratnam sampūrṇam ||

## || lakṣmīnṛsiṁhakaruṇāvalambastotram ||

śrīmatpayonidhiniketanacakrapāṇe
bhogīndrabhogamaṇirājitapuṇyamūrte |
yogīśa śāśvata śaraṇya bhavābdhipota
lakṣmīnṛsiṁha mama dehi karāvalambam ||1||

brahmendrarudramarudarkakirīṭakoṭi-
saṅghaṭṭitāṅghrikamalāmalakāntikānta |
lakṣmīlasatkucasaroruharājahaṁsa
lakṣmīnṛsiṁha mama dehi karāvalambam ||2||

saṁsāradāvadahanākarabhīkaroru-
jvālāvalībhiratidagdhatanūruhasya |
tvatpādapadmasarasīruhamāgatasya
lakṣmīnṛsiṁha mama dehi karāvalambam ||3||

saṁsārajālapatitasya jagannivāsa
sarvendriyārthabaḍiśāgrajhaṣopamasya |
protkampitapracuratālukamastakasya
lakṣmīnṛsiṁha mama dehi karāvalambam ||4||

saṁsārakūpamatighoramagādhamūlaṁ
saṁprāpya duḥkhaśatasarpasamākulasya |
dīnasya deva kṛpayā padamāgatasya
lakṣmīnṛsiṁha mama dehi karāvalambam ||5||

saṁsārabhīkarakarīndrakarābhighāta-
niṣpīḍyamānavapuṣaḥ sakalārtināśa |
prāṇaprayāṇabhavabhītisamākulasya
lakṣmīnṛsiṁha mama dehi karāvalambam ||6||

saṁsārasarpaviṣadigdhamahogratīvra-
daṁṣṭrāgrakoṭiparidaṣṭavinaṣṭamūrteḥ |
nāgārivāhana sudhābdhinivāsa śaure
lakṣmīnṛsiṁha mama dehi karāvalambam ||7||

संसारवृक्षमघबीजमनन्तकर्मशाखायुतं करणपत्रमनङ्गपुष्पम् ।
आरुह्य दुःखफलितं चकितं दयालो लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥८॥
संसारसागरविशालकरालकालनक्रग्रहग्रसितनिग्रहविग्रहस्य ।
व्यग्रस्य रागनिचयोर्मिनिपीडितस्य लक्ष्मीनृसिंह मम देहि करावलम्बम्॥९॥
संसारसागरनिमज्जनमुह्यमानं दीनं विलोकय विभो करुणानिधे माम् ।
प्रह्लादखेदपरिहारपरावतार लक्ष्मीनृसिंह मम देहि करावलम्बम्॥१०॥
संसारघोरगहने चरतो मुरारे मारोग्रभीकरमृगप्रचुरार्दितस्य ।
आर्तस्य मत्सरनिदाघसुदुःखितस्य लक्ष्मीनृसिंह मम देहि करावलम्बम्॥११॥
बद्ध्वा गले यमभटा बहु तर्जयन्तः कर्षन्ति यत्र भवपाशशतैर्युतं माम्।
एकाकिनं परवशं चकितं दयालो लक्ष्मीनृसिंह मम देहि करावलम्बम्॥१२॥
लक्ष्मीपते कमलनाभ सुरेश विष्णो यज्ञेश यज्ञ मधुसूदन विश्वरूप ।
ब्रह्मण्य केशव जनार्दन वासुदेव लक्ष्मीनृसिंह मम देहि करावलम्बम्॥१३॥
एकेन चक्रमपरेण करेण शङ्खमन्येन सिन्धुतनयामवलम्ब्य तिष्ठन् ।
वामेतरेण वरदाभयपद्मचिह्नं लक्ष्मीनृसिंह मम देहि करावलम्बम्॥१४॥
अन्धस्य मे हृतविवेकमहाधनस्य चोरैर्महाबलिभिरिन्द्रियनामधेयैः।
मोहान्धकारकुहरे विनिपातितस्य लक्ष्मीनृसिंह मम देहि करावलम्बम्॥१५॥
प्रह्लादनारदपराशरपुण्डरीकव्यासादिभागवतपुङ्गवहृन्निवास ।
भक्तानुरक्तपरिपालनपारिजात लक्ष्मीनृसिंह मम देहि करावलम्बम्॥१६॥
लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन स्तोत्रं कृतं शुभकरं भुवि शङ्करेण ।
ये तत्पठन्ति मनुजा हरिभक्तियुक्तास्ते यान्ति तत्पदसरोजमखण्डरूपम्॥१७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ लक्ष्मीनृसिंहकरुणावलम्बस्तोत्रं संपूर्णम्॥

## ॥ शङ्कराचार्यपदावलम्ब स्तुति॥

saṁsāravṛkṣamaghabījamanantakarmaśākhāyutaṁ karaṇapatramanaṅgapuṣpam |
āruhya duḥkhaphalitaṁ cakitaṁ dayālo lakṣmīnṛsiṁha mama dehi karāvalambam ||8||

saṁsārasāgaraviśālakarālakālanakragrahagrasitanigrahavigrahasya |
vyagrasya rāganicayorminipīḍitasya lakṣmīnṛsiṁha mama dehi karāvalambam ||9||

saṁsārasāgaranimajjanamuhyamānaṁ dīnaṁ vilokaya vibho karuṇānidhe mām |
prahlādakhedaparihāraparāvatāra lakṣmīnṛsiṁha mama dehi karāvalambam ||10||

saṁsāraghoragahane carato murāre mārograbhīkaramṛgapracurārditasya |
ārtasya matsaranidāghasuduḥkhitasya lakṣmīnṛsiṁha mama dehi karāvalambam ||11||

baddhvā gale yamabhaṭā bahu tarjayantaḥ karṣanti yatra bhavapāśaśatairyutaṁ mām |
ekākinaṁ paravaśaṁ cakitaṁ dayālo lakṣmīnṛsiṁha mama dehi karāvalambam ||12||

lakṣmīpate kamalanābha sureśa viṣṇo yajñeśa yajña madhusūdana viśvarūpa |
brahmaṇya keśava janārdana vāsudeva lakṣmīnṛsiṁha mama dehi karāvalambam ||13||

ekena cakramapareṇa kareṇa śaṅkhamanyena sindhutanayāmavalambya tiṣṭhan |
vāmetareṇa varadābhayapadmacihnaṁ lakṣmīnṛsiṁha mama dehi karāvalambam ||14||

andhasya me hṛtavivekamahādhanasya corairmahābalibhirindriyanāmadheyaiḥ |
mohāndhakārakuhare vinipātitasya lakṣmīnṛsiṁha mama dehi karāvalambam ||15||

prahlādanāradaparāśarapuṇḍarīkavyāsādibhāgavatapuṅgavahṛnnivāsa |
bhaktānuruktaparipālanapārijāta lakṣmīnṛsiṁha mama dehi karāvalambam ||16||

lakṣmīnṛsiṁhacaraṇābjamadhuvratena stotraṁ kṛtaṁ śubhakaraṁ bhuvi śaṅkareṇa |
ye tatpaṭhanti manujā haribhaktiyuktāste yānti tatpadasarojamakhaṇḍarūpam ||17||

iti śrīmatparamahaṁsaparivrājakācāryasya śrīgovindabhagavatpūjyapādaśiṣyasya
śrīmacchaṅkarabhagavataḥ kṛtau lakṣmīnṛsiṁhakaruṇāvalambastotraṁ saṁpūrṇam ||

|| śaṅkarācāryapadāvalamba stuti ||

Recite these on day 4:

॥ ललितापञ्चरत्न॥

प्रातः स्मरामि ललितावदनारविन्दं बिम्बाधरं पृथुलमौक्तिकशोभिनासम् ।

आकर्णदीर्घनयनं मणिकुण्डलाढ्यं मन्दस्मितं मृगमदोज्ज्वलभालदेशम्॥ १ ॥

प्रातर्भजामि ललिताभुजकल्पवल्लीं रत्नाङ्गुळीयलसदङ्गुलिपल्लवाढ्याम् ।

माणिक्यहेमवलयाङ्गदशोभमानां पुण्ड्रेक्षुचापकुसुमेषुसृणीःदधानाम्॥ २ ॥

प्रातर्नमामि ललिताचरणारविन्दं भक्तेष्टदाननिरतं भवसिन्धुपोतम् ।

पद्मासनादिसुरनायकपूजनीयं पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम्॥ ३ ॥

प्रातः स्तुवे परशिवां ललितां भवानीं त्रय्यन्तवेद्यविभवां करुणानवद्याम् ।

विश्वस्य सृष्टविलयस्थितिहेतुभूतां विश्वेश्वरीं निगमवाङ्गमनसातिदूराम्॥ ४॥

प्रातर्वदामि ललिते तव पुण्यनाम कामेश्वरीति कमलेति महेश्वरीति ।

श्रीशाम्भवीति जगतां जननी परेति वाग्देवतेति वचसा त्रिपुरेश्वरीति॥ ५॥

यः श्लोकपञ्चकमिदं ललिताम्बिकायाः सौभाग्यदं सुललितं पठति प्रभाते ।

तस्मै ददाति ललिता झटिति प्रसन्ना विद्यां श्रियं विमलसौख्यमनन्तकीर्तिम्॥ ६ ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ ललिता पञ्चरत्नम् सम्पूर्णम्॥

॥ शारदाभुजंगप्रयाताष्टकम्॥

सुवक्षोजकुम्भां सुधापूर्णकुंभां प्रसादावलम्बां प्रपुण्यावलम्बाम् ।

सदास्येन्दुबिम्बां सदानोष्ठबिम्बां भजे शारदाम्बामजस्रं मदम्बाम्॥ १ ॥

कटाक्षे दयार्द्रां करे ज्ञानमुद्रां कलाभिर्विनिद्रां कलापैः सुभद्राम् ।

पुरस्त्रीं विनिद्रां पुरस्तुङ्गभद्रां भजे शारदाम्बामजस्रं मदम्बाम्॥ २॥

ललामाङ्कफालां लसद्गानलोलां स्वभक्तैकपालां यशःश्रीकपोलाम् ।

करे त्वक्षमालां कनत्प्रत्नलोलां भजे शारदाम्बामजस्रं मदम्बाम्॥ ३ ॥

सुसीमन्तवेणीं दृशा निर्जितैणीं रमत्कीरवाणीं नमद्वज्रपाणीम् ।

सुधामन्थरास्यां मुदा चिन्त्यवेणीं भजे शारदाम्बामजस्रं मदम्बाम्॥ ४॥

Recite these on day 4:

|| lalitāpañcaratna ||

prātaḥ smarāmi lalitāvadanāravindaṁ bimbādharaṁ pṛthulamauktikaśobhināsam |
ākarṇadīrghanayanaṁ maṇikuṇḍalāḍhyaṁ mandasmitaṁ mṛgamadojjvalabhāladeśam ||1||

prātarbhajāmi lalitābhujakalpavallīṁ ratnāṅgulīyalasadaṅgulipallavāḍhyām |
māṇikyahemavalayāṅgadaśobhamānāṁ puṇḍrekṣucāpakusumeṣusṛṇīḥdadhānām ||2||

prātarnamāmi lalitācaraṇāravindaṁ bhakteṣṭadānaniratam̐ bhavasindhupotam |
padmāsanādisuranāyakapūjanīyaṁ padmāṅkuśadhvajasudarśanalāñchanāḍhyam ||3||

prātaḥ stuve paraśivāṁ lalitāṁ bhavānīṁ trayyantavedyavibhavāṁ karuṇānavadyām |
viśvasya sṛṣṭavilayasthitihetubhūtāṁ viśveśvarīṁ nigamavāṅgamanasātidūrām ||4||

prātarvadāmi lalite tava puṇyanāma kāmeśvarīti kamaleti maheśvarīti |
śrīśāmbhavīti jagatāṁ jananī pareti vāgdevateti vacasā tripureśvarīti ||5||

yaḥ ślokapañcakamidaṁ lalitāmbikāyāḥ saubhāgyadaṁ sulalitaṁ paṭhati prabhāte |
tasmai dadāti lalitā jhaṭiti prasannā vidyāṁ śriyaṁ vimalasaukhyamanantakīrtim ||6||

|| iti śrīmatparamahaṁsaparivrājakācāryasya śrīgovindabhagavatpūjyapādaśiṣyasya śrīmacchaṅkarabhagavataḥ kṛtau lalitā pañcaratnam sampūrṇam ||

|| śāradābhujaṁgaprayātāṣṭakam ||

suvakṣojakumbhāṁ sudhāpūrṇakuṁbhāṁ prasādāvalambāṁ prapuṇyāvalambām |
sadāsyendubimbāṁ sadānoṣṭhabimbāṁ bhaje śāradāmbāmajasraṁ madambām ||1||

kaṭākṣe dayārdro kare jñānamudrāṁ kalābhirvinidrāṁ kalāpaiḥ subhadrām |
purastrīṁ vinidrāṁ purastuṅgabhadrāṁ bhaje śāradāmbāmajasraṁ madambām ||2||

lalāmāṅkaphālāṁ lasadgānalolāṁ svabhaktaikapālāṁ yaśaḥśrīkapolām |
kare tvakṣamālāṁ kanatpratnalolāṁ bhaje śāradāmbāmajasraṁ madambām ||3||

susīmantaveṇīṁ dṛśā nirjitaiṇīṁ ramatkīravāṇīṁ namadvajrapāṇīm |
sudhāmantharāsyāṁ mudā cintyaveṇīṁ bhaje śāradāmbāmajasraṁ madambām ||4||

सुशान्तां सुदेहां दृगन्ते कचान्तां लसत्सल्लताङ्गीमनन्तामचिन्त्याम् ।

स्मरेत्तापसैः सङ्गपूर्वस्थितां तां भजे शारदाम्बामजस्रं मदम्बाम्॥५॥

कुरङ्गे तुरंगे मृगेन्द्रे खगेन्द्रे मराले मदेभे महोक्षेऽधिरूढाम् ।

महत्यां नवम्यां सदा सामरूपां भजे शारदाम्बामजस्रं मदम्बाम्॥६॥

ज्वलत्कान्तिवह्निं जगन्मोहनाङ्गीं भजे मानसाम्भोजसुभ्रान्तभृङ्गीम् ।

निजस्तोत्रसंगीतनृत्यप्रभाङ्गीम् भजे शारदाम्बामजस्रं मदम्बाम्॥७॥

भवाम्भोजनेत्राजसंपूज्यमानां लसन्मन्दहासप्रभावक्त्रचिह्नाम् ।

चलच्चञ्चलाचारूताटङ्ककर्णौ भजे शारदाम्बामजस्रं मदम्बाम्॥८॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारदाभुजंगप्रयाताष्टक संपूर्णम्॥

## ॥ कनकधारा स्तोत्र॥

अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।

अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदास्तु मम मङ्गळदेवतायाः॥१॥

मुग्धा मुहुर्विदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानि गतागतानि ।

माला दृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशतु सागरसंभवायाः॥२॥

आमीलिताक्षमधिगम्य मुदा मुकुन्दं आनन्दकन्दमनिमेषमनङ्गतन्त्रम् ।

आकेकरस्थितकनीनिकपक्ष्मनेत्रं भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः॥३॥

बाह्वन्तरे मधुजितः श्रितकौस्तुभे या हारावलीव हरिनीलमयी विभाति ।

कामप्रदा भगवतोऽपि कटाक्षमाला कल्याणमावहतु मे कमलालयायाः॥४॥

कालाम्बुदाळिललितोरसि कैटभारेः धाराधरे स्फुरति या तडिदङ्गनेव ।

मातुस्समस्तजगतां महनीयमूर्तिः भद्राणि मे दिशतु भार्गवनन्दनायाः॥५॥

प्राप्तं पदं प्रथमतः खलु यत्प्रभावात् माङ्गल्यभाजि मधुमाथिनि मन्मथेन ।

मय्यापतेत्तदिह मन्थरमीक्षणार्धं मन्दालसं च मकरालयकन्यकायाः॥६॥

विश्वामरेन्द्रपदवीभ्रमदानदक्षं आनन्दहेतुरधिकं मुरविद्विषोऽपि।

ईषन्निषीदतु मयि क्षणमीक्षणार्द्धम् इन्दीवरोदरसहोदरमिन्दिरायाः॥७॥

suśāntāṁ sudehāṁ dṛgante kacāntāṁ lasatsallatāṅgīmanantāmacintyām |
smarettāpasaiḥ saṅgapūrvasthitāṁ tāṁbhaje śāradāmbāmajasraṁ madambām ||5||

kuraṅge turaṁge mṛgendre khagendre marāle madebhe mahokṣe'dhirūḍhām |
mahatyāṁ navamyāṁ sadā sāmarūpāṁ bhaje śāradāmbāmajasraṁ madambām ||6||

jvalatkāntivahniṁ jaganmohanāṅgīṁ bhaje mānasāmbhojasubhrāntabhṛṅgīm |
nijastotrasaṁgītanṛtyaprabhāṅgīm bhaje śāradāmbāmajasraṁ madambām ||7||

bhavāmbhojanetrājasaṁpūjyamānāṁ lasanmandahāsaprabhāvaktracihnām |
calaccañcalācārūtāṭaṅkakarṇo bhaje śāradāmbāmajasraṁ madambām ||8||

|| iti śrīmatparamahaṁsaparivrājakācāryasya śrīgovindabhagavatpūjyapādaśiṣyasya
śrīmacchaṁkarabhagavataḥ kṛtau śāradābhujaṁgaprayātāṣṭaka saṁpūrṇam ||

|| kanakadhārā stotra ||

aṅgaṁ hareḥ pulakabhūṣaṇamāśrayantī bhṛṅgāṅganeva mukulābharaṇaṁ tamālam |
aṅgīkṛtākhilavibhūtirapāṅgalīlā māṅgalyadāstu mama maṅgaḻadevatāyāḥ ||1||

mugdhā muhurvidadhatī vadane murāreḥ prematrapāpraṇihitāni gatāgatāni |
mālā dṛśormadhukarīva mahotpale yā sā me śriyaṁ diśatu sāgarasaṁbhavāyāḥ ||2||

āmīlitākṣamadhigamya mudā mukundaṁ ānandakandamanimeṣamanaṅgatantram |
ākekarasthitakanīnikapakṣmanetraṁ bhūtyai bhavenmama bhujaṅgaśayāṅganāyāḥ ||3||

bāhvantare madhujitaḥ śritakaustubhe yā hārāvalīva harinīlamayī vibhāti |
kāmapradā bhagavato'pi kaṭākṣamālā kalyāṇamāvahatu me kamalālayāyāḥ ||4||

kālāmbudāḻilalitorasi kaiṭabhāreḥ dhārādhare sphurati yā taḍidaṅganeva |
mātussamastajagatāṁ mahanīyamūrtiḥ bhadrāṇi me diśatu bhārgavanandanāyāḥ ||5||

prāptaṁ padaṁ prathamataḥ khalu yatprabhāvāt māṅgalyabhāji madhumāthini manmathena |
mayyāpatettadiha mantharamīkṣaṇārdhaṁ mandālasaṁ ca makarālayakanyakāyāḥ ||6||

viśvāmarendrapadavībhramadānadakṣaṁ ānandaheturadhikaṁ muravidviṣo'pi |
īṣanniṣīdatu mayi kṣaṇamīkṣaṇārddham indīvarodarasahodaramindirāyāḥ ||7||

iṣṭā viśiṣṭamatayo'pi yayā dayārdra dṛṣṭyā triviṣṭapapadaṁ sulabhaṁ labhante |
dṛṣṭiḥ prahṛṣṭakamalodaradīptiriṣṭāṁ puṣṭiṁ kṛṣīṣṭa mama puṣkaraviṣṭarāyāḥ ||8||

